एवं स्थितेऽत्र यो ब्रह्म ध्यातुमिच्छेत् पुमानसौ ।
नृशृङ्गादिमुपेक्षेत शिष्टं ध्यायेद् यथायथम् ॥ २५ ॥
शिलादौ नामरूपे द्वे त्यक्त्वा सन्मात्रचिन्तनम् ।
त्यक्त्वा दुःखं घोरमूढधियोः सच्चिद् विवेचनम् ॥ २६ ॥
शान्तासु सच्चिदानन्दांस्त्रीनप्येवं विचिन्तयेत् ।
कनिष्ठमध्यमोत्कृष्टास्तिस्रश्चिन्ताः क्रमादिमाः ॥२७॥
मन्दस्य व्यवहारेऽपि मिश्रब्रह्मणि चिन्तनम् ।
उत्कृष्टं वक्तुमेवात्र विषयानन्द ईरितः ॥ २८ ॥
औदासीन्ये तु धीवृत्तेः शैथिल्यादुत्तमोत्तमम् ।
चिन्तनं वासनानन्दो ध्यानमुक्तं चतुर्विधम् ॥ २९ ॥

---

एतदभिधानं किमर्थमित्याशङ्क्य ब्रह्मध्यानार्थमित्याह एवं स्थित इति । नृशृङ्गादिमुपेक्ष्यान्यत्र ब्रह्मध्यानं कर्त्तव्यमित्याह नृशृङ्गादिमिति ॥ २५ ॥

अन्यत्रेत्युक्तं कुत्र कथं ध्येयमित्यत आह शिलादाविति । घोरमूढबुद्धिवृत्तिषु दुःखं परित्यज्य सच्चिद्रूपयोश्चिन्तनं कर्त्तव्यमित्याह त्यक्त्वेति ॥ २६ ॥

सात्त्विकवृत्तिषु सच्चिदानन्दास्त्रयोऽपि ध्येया इत्याह शान्तेति । एषां ध्यानानां किं साम्यं नेत्याह कनिष्ठेति ॥ २७ ॥

इदानीं निर्गुणध्यानेऽनधिकारिणोऽनुग्रहाय मिश्रब्रह्मध्यानेऽधिकार उक्त इत्यभिप्रायेणाह मन्दस्येति ॥ २८ ॥

एवं सद्वृत्तिकं ध्यानत्रयमुक्त्वा असद्वृत्तिकं ध्यानमाह औदासीन्ये इति । उत्तमोत्तममिति एभ्यो ध्यानेभ्योऽधिकमित्यर्थः । उक्तं निगमयति ध्यानमुक्तमिति ॥ २९ ॥

न ध्यानं ज्ञानयोगाभ्यां ब्रह्मविद्यैव सा खलु ।
ध्यानेनैकाग्रमापन्ने चित्ते विद्या स्थिरीभवेत् ॥ ३० ॥
विद्यायां सच्चिदानन्दा अखण्डैकरसात्मताम् ।
प्राप्य भान्ति न भेदेन भेदकोपाधिवर्जनात् ॥ ३१ ॥
शान्ता घोराः शिलाद्याश्च भेदकोपाधयो मताः ।
योगाद् विवेकतस्त्वेषामुपाधीनामपाकृतिः ॥ ३२ ॥
निरुपाधि ब्रह्मतत्त्वे भासमाने स्वयं प्रभे ।
अद्वैते त्रिपुटी नास्ति भूमानन्दोऽयमुच्यते ॥ ३३ ॥
ब्रह्मानन्दाभिधे ग्रन्थे पञ्चमाध्याय ईरितः ।
विषयानन्द एतेन द्वारेणान्तः प्रविश्यताम् ॥ ३४ ॥
प्रीयाद्धरिर्हरोऽनेन ब्रह्मानन्देन सर्वदा ।

अथ ध्यानाथान्तरभेदः किं नेत्याह न ध्यानमिति । तर्हि किमेतादित्याशङ्क्याह ब्रह्मविद्येति । इयं ब्रह्मविद्या कथमुत्पन्नेत्याशङ्क्याह ध्यानेनेति ॥ ३० ॥

अस्याविद्यात्वे हेतुमाह विद्यायामिति ॥ ३१ ॥

भेदकोपाधिवर्ज्जनादित्युक्तं तानेव भेदकोपाधीनाह शान्ता घोरा इति । एतेषां परिहारः केनोपायेन इत्याशङ्क्याह योगादु विवेक इति ॥ ३२ ॥

फलितमाह निरुपाधीति । त्रिपुटीभानाभावात् भूमानन्दोऽयमुच्यते इत्यर्थः ॥ ३३ ॥

ग्रन्थमुपसंहरति ब्रह्मानन्देति ॥ ३४ ॥

पायाच्च प्राणिनः सर्व्वान् स्वाश्रितान् शुद्धमानसान् ॥ ३५

इति ब्रह्मानन्दे विषयानन्दः समाप्तः ।

इति श्रीभारतीतीर्थविद्यारण्यमुनीश्वरविरचित पञ्चदश-
प्रकरणात्मकपञ्चदशीग्रन्थः समाप्तः ।

---

निर्विघ्नग्रन्थसमाप्तिद्योतनार्थं देवतानामोच्चारणपूर्वकमिच्छामां-
सीदन्त्यकं श्लोकमाह प्रीयादिति ॥ ३५ ॥

इति ब्रह्मानन्दे विषयानन्दव्याख्या समाप्ता ।

इति श्रीपरमहंसपरिव्राजकाचार्य्य श्रीभारतीतीर्थविद्यारण्य-
मुनिवर्य्य शिष्येण श्रीरामकृष्णविदुषा विरचिता पञ्च-
दशप्रकरणात्मकपञ्चदश्याख्यग्रन्थस्य
टीका समाप्ता ।

---

প্রিন্টর—শ্রীক্ষেত্রমোহন মুখোপাধ্যায়।
২০ নং বাগাপুকুর লেন।